"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥" इति ।

अपरिग्रहः समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः ॥

नियमानाह—शौच° इति । शौचं बाह्याभ्यन्तरलक्षणम् । तदुक्तं[1]—

"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥" इति ।

सन्तोषो यदृच्छालाभसन्तुष्टिरलाभे चाविषादः । तपः कामानशनं "[2]तपो नानशनात्परम्" इतिश्रुतेः । अनशनं च कामानशनमेव । केचित्तु "[3]मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप" इत्याद्युक्तलक्षणं तप इत्याहुः । सर्वथा तु नात्र चान्द्रायणादिः तपःशब्दार्थस्तस्य समाधिविरोधादिति द्रष्टव्यम् । स्वाध्यायः प्रणवजप उपनिषद्ग्रन्थावृत्तिश्च "ओमित्येवं[4] ध्यायथ आत्मानम्", "[5]उपनिषदमावर्तयेत्" इतिश्रुतेः । ईश्वरप्रणिधानं तस्य मानसैरुपचारैरभ्यर्चनं "तं ह[6] देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इतिमन्त्रलिङ्गात् ॥

अथासनादीनि कथयति—कर इति । स्वस्तिकादीनीत्यादिपदाद्भद्रवीरासनादिग्रहः । रेचकः प्राणवायोः शनैर्वामनासापुटाद्दक्षिणनासापुटाद्वा सव्यापसव्यन्यायेन बहिर्निःसारणम् । पूरकस्तस्य तथैवान्तःप्रवेशनम् । कुम्भकस्तु पूरितस्य वायोरन्तरेव निरोध इति भेदः । समाधेर्ध्यानस्वभेदं द्योतयितुं विच्छिद्य विच्छिद्येत्युक्तम् । सुगममन्यत् ॥३१॥

एवं साङ्गसमाधिमनुतिष्ठतो यदातिवृष्टिरनावृष्टिराष्ट्रविप्लवव्याघ्रचौरज्वराद्युपद्रवविघ्नसम्भावना भवति तदा तन्निवृत्तिर्लोकावगतसाधनावलम्बनेन कार्या । यदा तु मनस्येव विघ्नाः प्रादुर्भविष्यन्ति तदा तन्निवारणोपायमुपदेष्टुकामस्तत्रत्यान्विघ्नान्निर्दिशति—अस्येति । लयादीन्विभज्य लक्षयति—लयस्तावदिति ॥३२॥

---

१. *Yājñavalkyagītā* i 69, and *Dakṣasaṁhitā*. 5. २. *Mahānārā*. 21. 2. ३. *Upadeśasāhasrī* xvii ४. *Muṇḍ*. 2. 2. 6. ५. *Āruṇeya*. 2. ६. *Śvet*. 6. 18.

उत्कलयादिविघ्नचतुष्टयाभावेन चित्तस्य ज्ञेये वस्तुनि यन्नैश्चल्यं तद्दृष्टान्तेन निर्विकल्पकसमाधिलक्षणमित्याह—तदेति। विघ्ननिवृत्त्युपायं सम्मतिप्रदर्शनेनाह—तदुक्तमित्यादिना। लये सम्बोधयेत् उत्तम्भयेत्सोत्साहं मनः कुर्यादिति यावत्। विक्षिप्तं चित्तं धैर्यावलम्बनेन पुनः शमयेत्पुनरद्वितीयवस्तुनिष्ठं कुर्यादित्येतत्। सकषायं चित्तं विजानीयात्कलुषितं मे चित्तमिति विज्ञाय चसमेऽद्वितीयचैतन्यात्मनि निवेशयेत्। पुनः शमप्राप्तं तन्न चालयेत्तत्रैव प्रयत्नपूर्वकं स्थिरीकुर्यादित्यर्थः। रसं सविकल्पकानन्दं नास्वादयेत्तदानन्दमात्रेण कृतार्थतां न मन्वीत किन्तु प्रज्ञया विवेकबुद्ध्या निःसङ्गः सविकल्पकानन्देऽनासक्तो भवेदित्यर्थः। एवं विघ्नपरिहारे सति यन्निर्विकल्पकसमाध्यवस्थानं चित्तस्य तद्भगवद्वाक्योदाहरणेन दर्शयति—यथा दीप इति॥३३॥

एवंविधसमाध्यन्तसाधनानुष्ठानपरिपाके सति पूर्वोक्तप्रकारेण ब्रह्मात्मैक्यसाक्षात्कारे दृढीभूतेऽविद्यातत्कार्यात्मकसर्वसंसारनिवृत्तौ जायमानायां काकतालीयन्यायेन यदि प्रारब्धकर्मक्षयात्तत्काल एव विदुषः शरीरपातस्तदा सद्य एव मुक्तिः स्यात्। यदा तु ज्ञानोत्पत्तिसमये प्रारब्धकर्म न क्षीयते तदा तत्क्षयपर्यन्तं शरीरस्यावस्थानाज्जीवन्नेव मुक्तसंसारो भवति। तस्य लक्षणं वक्तुं प्रतिजानीते—अथेति। अथ शब्दः साधननिरूपणानन्तर्यार्थः। लक्षणमाह—जीवन्मुक्तो नाम इति। ब्रह्मनिष्ठत्वं वेदान्तवेद्यब्रह्मात्मनावस्थितत्वम्। ब्रह्मनिष्ठो जीवन्मुक्त इत्युक्ते परमार्थतो ब्रह्मनिष्ठत्वममुक्तस्याप्यस्तीत्यतो विशिनष्टि—अखिलबन्धरहित इति। परममुक्तवैधर्म्यसिद्धये प्रारब्धकर्ममात्रशेष इति विशेषणान्तरमध्याहर्तव्यम्। कथमसौ मुक्त इत्यपेक्षायामाह—अज्ञानतत्कार्य° इति। अज्ञानं सदसद्भ्यामनिर्वचनीयमित्याद्युक्तलक्षणम्। स्थूलसूक्ष्मप्रपञ्चद्वयम्। तत्कार्यं सञ्चितं कर्म ज्ञानोत्पत्तेः प्रागुत्पन्नमनारब्धफलम्। संशयो देहाद्यतिरिक्तो ब्रह्मस्वरूप आत्मा भवति न वेति। अथवा ब्रह्मात्मविज्ञानान्मोक्षो भवेन्न वेत्यादिविचिकित्सा। विपर्ययो देहादिष्वात्माभिमानादिलक्षणः। आदिशब्दाद्बाह्यप्रपञ्चे सत्यत्वबुद्धिः। एतेषां बाधितत्वान्मुक्त इत्यर्थः। एतत्कदा स्यादित्याकाङ्क्षायामाह—स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते सतीति°। साक्षात्कारे साधनमाह—स्वरूपाखण्डब्रह्मज्ञानेनेति॥

तत्त्वसाक्षात्कारानन्तरं मुक्त एवं भवतीत्यत्र प्रमाणमाह—भिद्यत इति। हृदयग्रन्थिरहङ्कारश्चिज्जडात्मकत्वाद् ग्रन्थिरिव ग्रन्थिः। सर्वसंशया दृष्टा-

दृष्टार्थविषया विचिकित्साः । अस्यात्मनः कर्माणि जीवन्मुक्तिपक्षे प्रारब्धातिरिक्तानि सञ्चितानि क्रियमाणानि च । तथा च न्यायः—"[1]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति । परममुक्तिपक्षे प्रारब्धसहितान्यपि क्षीयन्ते । कदा । तस्मिन्निष्प्रपञ्चे ब्रह्मात्मनि दृष्टे सति साक्षात्कृते सति । कथम्भूते । परावरे सर्वात्मके । अत्र सर्वात्मकत्ववचनं तद्व्यतिरिक्तस्याभावपरम् । चौरः स्थाणुरितिवद्बाधायां सामानाधिकरण्यस्य विवक्षितत्वात् । यद्वा परो हिरण्यगर्भः सोऽवरो न्यूनो यस्मात्तस्मिन्परावर इत्याथर्वणीयश्रुत्यर्थः । आदिपदात् "यस्तु सर्वाणि भूतानि", "यस्मिन्सर्वाणि भूतानि" इति च मन्त्रद्वयमीशावास्यगतं[2] परिगृह्यते । श्रुतेश्चेति । चकारात् "[3]यथैधांसि समिद्धोऽग्निः", "यज्ज्ञात्वा[4] न पुनर्मोहं", "ब्रह्मभूतः[5] प्रसन्नात्मा न शोचति न काङ्क्षति" इत्यादिस्मृतयः समुच्चीयन्ते । न च जीवन्मुक्तौ प्रमाणाभावः "तद्यथा हि[6] निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते", "तस्य[7] तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यादिश्रुतेः "[8]प्रजहाति यदा कामान्", "[9]प्रकाशं च प्रवृत्तिं च" इत्यादिस्मृतेश्च प्रमाणत्वादिति द्रष्टव्यम् ॥३४॥

ननु जीवन्मुक्तो देहेन्द्रियादिभिर्व्यवहरति न वा ? आद्ये तस्य बद्धान्न विलक्षणता । द्वितीये देहस्यानुपयोगात्सद्यःपातप्रसङ्ग इत्याह—**अयं तु** इति । प्रारब्धफलानि भुज्यमानानि पूर्वपूर्ववासनया क्रियमाणानि च कर्माणि साक्षितया कर्तृत्वभोक्तृत्वाभिमानहीनोऽन्यदृष्ट्या पश्यन्निव भासमानोऽपि परमार्थतः स्वदृष्ट्या न पश्यति ज्ञानेन कर्तृत्वाद्यभिमानमूलाज्ञानस्य बाधितत्वाद्बद्धाद्विलक्षण एवायमित्यर्थः । बलवत्प्रयुक्तबाणपाषाणादिवत्प्रवृत्तफलस्य कर्मणो यावद्वेगक्षयं निवारकाभावात्तदधीनस्य देहस्य न सद्यःपातप्रसङ्ग इति द्रष्टव्यम् । उक्तमर्थं दृष्टान्तेन स्पष्टयति—**यथेन्द्रजालम्** इति । बाधितत्वबुद्धेरनुवृत्तेरित्यर्थः । जीवन्मुक्तो देहादिभिर्व्यवहरन्निव दृश्यमानोऽपि न परमार्थतो व्यवहरतीत्यत्र श्रुतिं प्रमाणयति—**सचक्षुरचक्षुरिवेति** । चक्षुरादिमानपि प्रपञ्चरूपाद्यदर्शनाच्चक्षुरादिहीन इव भवतीत्यर्थः । आदिपदात् "[10]तदेजति तन्नैजति" इत्यादिश्रुत्यन्तरग्रहः । उक्तेऽर्थे पूर्वाचार्यसम्मतिमाह—**उक्तं च सुषुप्तवदिति** । जाग्रति जाग्रदवस्थायां द्वयं पश्यन्नपि यः सुषुप्तिं गतवद्विशेषतो न पश्यति स आत्मवित् । विशेषादर्शने हेतुः—**अद्वयत्वतः** इति । द्वयस्य बाधितत्वादित्यर्थः तथा कुर्वन्नपि न करोति

१. *Brahmasūtra* 4. 1. 13. २. *Īśa* 6, 7. ३. *Gītā* iv. 37. ४. *Idem*. iv. 35. ५. *Idem*. xviii. 54. ६. *Brih*. 4. 4. 7. ७. *Chhā*. 6. 14. 2. ८. *Gītā* ii. 55. ९. *Idem*. xiv. 22. १०. *Īśa*. 5.

यतो निष्क्रिय इति योजना । तथा च वसिष्ठः—"सुषुप्तवद्यश्चरति[१] स मुक्त इति कथ्यते" इति ॥३५॥

नन्वसौ जीवन्मुक्त इति कथमन्यैर्ज्ञायत इति तदाह—अस्य ज्ञानात्पूर्वमिति । अशुभवासनानां साधकावस्थायामेव निर्वर्तितत्वाच्छुभवासनानामेवानुवृत्तिर्भवतीत्यर्थः । ननु शास्त्रविहितं शुभमेवाचरतो न साधकाद्भेद इत्यपरितुष्यन्निवाह—'शुभाशुभयोरौदासीन्यं वा' इति । औदासीन्यमुपेक्षा "हिंसानुग्रहयोरनारम्भी" इति गौतमस्मरणात् ।[२]

"[३]निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥"

इति व्यासवचनात् । "[४]अमौनं मौनं च निर्विद्याथ ब्राह्मण" इति बृहदारण्यकश्रुतेश्च । तथा चौदासीन्यमेव मुक्तलक्षणं न विधिपरतन्त्रप्रवृत्तिमत्त्वं न वा निषेधातिक्रम इति भावः ॥

विधिनिषेधशास्त्रपरवशत्वं चेन्मुक्तस्य न भवेत्तर्हि यथेष्टाचरणं प्राप्नोतीत्याशङ्कां नैष्कर्म्यसिद्धिवाक्येन प्रत्याचष्टे—तदुक्तं बद्ध इति । सतत्त्वं याथात्म्यम् । मुमुक्षोरपि नास्ति यथेष्टचेष्टा विदुषो मुक्तस्य कुत एव सा । तदप्युक्तम्[५]—

यो हि यत्र विरक्तः स्यान्नासौ तस्मिन्प्रवर्तते ।
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ॥
क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति ॥
रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः ॥" इत्यादि ॥३६॥

नन्वविद्याकार्यत्वाद्यथेष्टचेष्टाया अविद्यानिवृत्त्या तन्निवृत्तिवदमानित्वादीनामद्वेष्टृत्वादीनामप्यविद्याकार्यत्वाविशेषान्निवृत्तिरेव स्यान्नानुवृत्तिरित्याशङ्क्य नियोगवशादनुवृत्त्यभावेऽपि निवृत्तिशास्त्रविरुद्धस्वभावत्वान्न निवर्तेरन्निति दर्शयति—तदानीमिति । तत्रापि नैष्कर्म्यसिद्धिमुदाहरति तदुक्तमुत्पन्ना इति ॥३७॥

---

१. *Yogavāsiṣṭha* 5., 16. 19. २. *Gautamadharmaśāstra* iii. 24.25 ३. Mahābhārata 12. 9430 (chap. 264.) ४. *Brih.* 3. 5. 1. ५. *Naiṣkarmyasidhi* iv. 65-67.

इदानीमुक्तं जीवन्मुक्तमनूद्य तस्य परममुक्तिं दर्शयति—किं बहुना इति । देहयात्रा देहस्थितिः । तन्मात्रार्थं न त्विन्द्रियप्रीत्यर्थम् । सुखदुःखलक्षणानि सुखदुःखसाधनानि । प्रारब्धफलानि भोग्यानि । अनुभवन्नसङ्गतया भुञ्जानः । कथं भुञ्जान इत्युच्यते अन्तःकरणाभासादीनां विषयाकारवृत्तीनां साक्षितयावभासकः सन्निति यावत् । तदवसाने प्रारब्धफलभोगावसाने जात आश्रयाभावात्प्राणे ब्रह्मणि लीने सति पूर्वसिद्धज्ञानेनैव प्रारब्धकर्माक्षिप्ताज्ञानतत्कार्यतत्संस्काराणामपि विनाशात्सञ्चितकर्मणां ज्ञानेन दाहात्क्रियमाणैश्चासंश्लेषात्पुनर्देहान्तरहेत्वभावात्परमकैवल्येत्यादिनोक्तब्रह्मस्वरूप एवावतिष्ठते विद्वानित्यर्थः ॥

निर्गुणब्रह्मसाक्षात्कारवतः प्राणा नोत्क्रमन्ति किन्तु प्रत्यग्ब्रह्मण्येव तप्तायःपीताम्बुवल्लीयन्त इत्यत्र प्रमाणमाह—न तस्येति । मुक्तेरसाध्यत्वे काठकश्रुतिं प्रमाणयति—विमुक्तश्च विमुच्यत इति । पूर्वमपि मुक्त एव सन्नविद्याप्रत्युपस्थापितनामरूपोपाध्यविवेकनिबन्धनस्य संसाराभासस्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयप्रत्यग्ब्रह्मरूपोऽहमस्मीत्यपरोक्षज्ञानाद्विलयापेक्षया विमुच्यत इत्यर्थः । वस्तुतस्तु न बन्धो न वा मोक्षः । तथा च श्रुतिः—

"न[2] निरोधो न चोत्पत्तिर्न बन्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥"

इत्याद्याः ॥३८॥

विद्यासीतावियोगक्षुभितनिजसुखः शोकमोहाभिपन्न-
श्चेतःसौमित्रिमित्रो भवगहनगतः शास्त्रसुग्रीवसख्यः ।
हत्वास्ते दैन्यवालिं मदनजलनिधौ धैर्यसेतुं प्रबध्य
प्रध्वस्ताबोधरक्षःपतिरधिगतचिज्जानकिः स्वात्मरामः ॥

वेदान्तसारविवृतिं रामतीर्थाभिधो यतिः ।
चक्रे श्रीकृष्णतीर्थश्रीपदपङ्कजषट्पदः ॥

इति श्रीकृष्णतीर्थपूज्यपादशिष्यश्रीरामतीर्थयतिविरचिता
विद्वन्मनोरञ्जनीनाम्नी वेदान्तसारटीका समाप्ता ॥

—:०:—

2. Gauḍapāda's *Kārikās* 2. 32. Cf. *Brahmabindu* 10.

# सङ्केतनिर्देश

| | |
|---|---|
| ई० उ० | ईशोपनिषद् |
| उ० सा० | उपदेशसाहस्री |
| क० उ० | कठोपनिषद् |
| गौ० का० | गौडपादकारिका |
| छा० उ० | छान्दोग्योपनिपद् |
| तै० ब्रा० | तैत्तिरीयब्राह्मण |
| बृ० उ० | बृहदारण्यकोपनिषद् |
| ब्र० सू० शा. भा. | ब्रह्मसूत्रशाङ्करभाष्य |
| मा० उ० | माण्डूक्योपनिषद् |
| वि० चू० | विवेकचूडामणि |
| श्वे० उ० | श्वेताश्वतरोपनिषद् |
| सि० ले० स० | सिद्धान्तलेशसंग्रह |

# पारिभाषिकशब्दपरिचय

**अजहल्लक्षणा—**

वाच्यार्थ का परित्याग किए बिना वाच्यार्थ से सम्बद्ध अर्थ का बोध कराने वाली वृत्ति को अजहल्लक्षणा कहते हैं।

"तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति।"

वेदान्तसार २६

"वाच्यार्थापरित्यागेन तत्सम्बन्धिनी वृत्तिः अजहल्लक्षणा। यथा "शोणो धावति।" विद्वन्मनोरञ्जनी

**अज्ञान—**

"अज्ञान सत् एवं असत् रूप से अनिर्वचनीय त्रिगुणात्मक, ज्ञान का विरोधी एवं भाव रूप है। यत्किञ्चित्—(कुछ है) रूप में उसकी प्रतीति होती है।

अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात् 'देवात्मशक्ति स्वगुणैर्निगूढाम्' इत्यादिश्रुतेश्च।" वेदान्तसार ६

**अद्वैत—**

अद्वैत शब्द का अर्थ द्वैतविरोधी एवं भेदरहित तत्त्व है। अद्वैत वेदान्त के अनुसार अद्वैत तत्त्व प्रमाण आदि का विषय नहीं है।

"नह्यदेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति॥" ब्रह्मसूत्र—शाङ्करभाष्य १।१।४

**अधिकारी—**

जिसने इस जन्म में अथवा जन्मान्तर में वेदों एवं वेदाङ्गों का विधिपूर्वक अध्ययन कर समस्त वेदान्त के अर्थ को समझ लिया है तथा काम्य और निषिद्ध कर्मों के परित्यागपूर्वक, नित्य, नैमित्तिक, प्रायश्चित्त एवं उपासना-कर्मों का अनुष्ठान करने से समस्त पापों के दूर हो जाने के कारण, जिसका अन्तःकरण निर्मल हो गया है तथा जो साधन-चतुष्टय से सम्पन्न है, उसे ही (ब्रह्मविद्या के अध्ययन का) अधिकारी कहते हैं।

"अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन्

जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तःसाधनचतुष्टयसम्पन्नः प्रमाता।" वेदान्तसार ४

**अध्यारोप—**

वस्तु में अवस्तु के आरोप को अध्यारोप कहते हैं। ब्रह्म वस्तु एवं उसमें आरोपित जड़ प्रपञ्च अवस्तु है। 'वस्तुनि अवस्त्वारोपोऽध्यारोपः।'

वेदान्तसार ६

**अध्यास—**

जो वस्तु जिसमें नहीं है उसको उस वस्तु में देखना अध्यास है। अध्यास अविद्यारूप है। शुक्ति में रजत एवं रज्जु में सर्प का भ्रम अध्यास रूप ही है।

'अतस्मिंस्तद्बुद्धिरध्यासः।' ब्र० सू० शा० भा० १।१।१

'अध्यासं पण्डिता अविद्येति मन्यन्ते।' ब्र० सू० शा० भा० उपोद्घात

**अनिर्वचनीय—**

वेदान्त में सत् एवं असत् से विलक्षण को अनिर्वचनीय कहते हैं। सत् का अर्थ परमार्थ सत् एवं असत् का अर्थ अलीक असत् (शशश्रृंग या आकाशकुसुम) है। जो इन दोनों से विलक्षण है, वह अनिर्वचनीय है। माया एवं मायिक जगत् अनिर्वचनीय है, क्योंकि वह न तो पारमार्थिक सत् ब्रह्म की तरह सत् और न शशश्रृंग की तरह सर्वथा असत्।

**अनुबन्ध—**

किसी ग्रन्थ के अधिकारी, विषय, सम्बन्ध एवं प्रयोजन को अनुबन्ध कहते हैं।

"तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि।" वेदान्तसार, ३

**अन्तर्यामी—**

अन्तर्यामी का अर्थ है भीतर से नियमन करने वाला। अज्ञान की समष्टि उपाधि से युक्त चैतन्य को वेदान्त में अन्तर्यामी कहा जाता है।

"एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणम् ईश्वर इति च व्यपदिश्यते सकलज्ञानावभासकत्वात्।"

वेदान्तसार ७

**अपरिग्रह—**

समाधि का अनुष्ठान करने में जिन वस्तुओं का कोई उपयोग नहीं है उनका संग्रह न करना अपरिग्रह है।

"समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः।" विद्वन्मनोरञ्जनी

"विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रहः।"

व्यासभाष्य २।३०

**अपवाद—**

अपवाद का अर्थ आरोपित वस्तु का निराकरण है। अध्यारोप के द्वारा वस्तु (ब्रह्म) में अवस्तु (प्रपञ्च) का आरोप किया जाता है, किन्तु अपवाद के द्वारा यह सिद्ध किया जाता है कि वस्तु में जिस अवस्तु का आरोप किया जाता है, वह सत्य नहीं है, अपितु वस्तु (ब्रह्म) मात्र ही सत्य है। इसी तथ्य को रस्सी और सर्प के दृष्टान्त से भी समझा जा सकता है। जिस प्रकार रज्जु में आरोपित सर्प का मिथ्यात्व सिद्ध किया जाता है, उसी प्रकार वस्तु-स्वरूप ब्रह्म में आरोपित जगत् भी मिथ्या है।

"अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्। वेदान्तसार, ११। विशेष देखिए विवेक।

**अभ्यास—**

प्रकरणप्रतिपाद्य वस्तु का मध्य में पुनः-पुनः प्रतिपादन करना अभ्यास है।

"प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः।"

वेदान्तसार ३०

**अवस्तु—**

अज्ञानादि सम्पूर्ण जड़समूह अवस्तु कहलाता है।

'अज्ञानादिसकलजडसमूहोऽवस्तु॥' वेदान्तसार ६

**अविद्या—**

अविद्या का अर्थ अज्ञान है। अविद्या जीवाश्रया है। अविद्या के कारण ही जीव परमार्थ सत् स्वरूप ब्रह्मतत्त्व का बोध करने में असमर्थ होता है तथा मिथ्या जगत् को सत्य समझ लेता है। इस प्रकार समस्त प्रपञ्च की जननी अविद्या ही है। अविद्यात्मिका हि बीजशक्तिः। ब्र० सू० शा० भा० १.४३

**अस्तेय—**

विना दी हुई वस्तु को ग्रहण करने से बचना अर्थात् दूसरे की वस्तु का अपहरण न करना अस्तेय है।

"अस्तेयमदत्तादानरूपपरस्वहरणसाहित्यम्।" विद्वन्मनोरञ्जनी

"स्तेयम शास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति।" व्यासभाष्य २।३०

**अहं ब्रह्मास्मि—**

वेदान्तसार में 'अहं ब्रह्मास्मि' वाक्य को 'अनुभव वाक्य' संज्ञा से अभिहित किया गया है। जब आचार्य के द्वारा अध्यारोप और अपवाद के माध्यम से अधिकारी शिष्य को 'तत्त्वमसि' वाक्य का अर्थबोध करा दिया जाता है, तो अधिकारी शिष्य के चित्त में "मैं नित्य, शुद्ध, बुद्ध, मुक्तस्वभाववाला अद्वितीय ब्रह्म हूँ" इस प्रकार की ऐक्यबोधक चित्तवृत्ति उत्पन्न होती है। एवंविध अनुभूति के बोधक वाक्य 'अहं ब्रह्मास्मि' को वेदान्तसार में अनुभव-वाक्य कहा गया है, 'अहं ब्रह्मास्मि' अलौकिक वृत्ति ही है, ब्रह्मसाक्षात्कार की स्थिति नहीं।

**अहिंसा—**

वाणी, मन और शरीर से दूसरों को पीड़ा न पहुंचाना अहिंसा है।

"वाङ्मनःकायैः परपीडावर्जनमहिंसा।" विद्वन्मनोरञ्जनी

"अहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः। व्यासभाष्य २।१०

**आत्मविद्—**

अद्वैत का निश्चय (ज्ञान) हो जाने के कारण जो जागरणकाल में भी सुषुप्ति में सोए हुए पुरुष के समान नहीं देखता तथा जो कार्यों को करता हुआ भी, निष्क्रिय रहता है अर्थात् उन कार्यों में लिप्त नहीं होता, उसे आत्मविद् (जीवन्मुक्त) कहते हैं।

सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं च पश्यन्नपि चाद्वयत्वतः।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः॥

उपदेशसाहस्री १०।१३

**आनन्दमयकोश—**

ईश्वर के उपाधिभूत समष्टिरूप अज्ञान को आनन्द के प्राचुर्य से युक्त होने के कारण और कोश के समान चैतन्य का आच्छादक होने के कारण आनन्दमय कोश कहते हैं।

"...आनन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः..."

वेदान्तसारः ७

**आवरणशक्ति—**

अज्ञान की उस शक्ति को आवरण शक्ति कहते हैं, जो स्वयं परिच्छिन्न

होते हुए भी (अज्ञानावरण के प्रसार द्वारा) अपरिच्छिन्न आत्मस्वरूप को उसी प्रकार आच्छादित कर लेती है जिस प्रकार एक छोटा-सा मेघ का टुकड़ा दर्शक के नेत्रों के सम्मुख आकर अनेक योजन विस्तृत सूर्य को भी ढक लेता है और परिणामस्वरूप दर्शक सूर्य को नहीं देख पाता ।

"आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायततमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाज्ञानं परिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम् ।"

वेदान्तसार १०

**आसन—**

हस्त, चरण आदि अङ्गों को स्थिरतापूर्वक किसी विशेष स्थिति में रखना 'आसन' कहलाता है। स्वस्तिक, गोमुख, पद्म एवं हंस आदि भेदों से आसन अनेक प्रकार के माने गए हैं—

"करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि ।"

वेदान्तसार ३१

**उपपत्ति—**

प्रकरणप्रतिपाद्य विषय को प्रामाणिक सिद्ध करने के लिए जो युक्तियाँ उपस्थित की जाती हैं, उन्हें उपपत्ति कहते हैं। जैसे जगत् को ब्रह्म का विवर्त सिद्ध करने के लिए 'सौम्येकेन मृत्पिण्डेन' आदि युक्तियाँ उपपत्ति है।

"प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः ।"

वेदान्तसार ३०

**उपरति—**

श्रवण-मननादि से अतिरिक्त विषयों से हटाई गई—मन-रूप अन्तरिन्द्रिय एवं चक्षु-श्रोत्र प्रभृति बाह्येन्द्रियों का पुनः श्रवण आदि से अतिरिक्त विषयों में प्रवृत्त न होना, उपरति कहलाता है अथवा शास्त्रविहित नित्य-नैमित्तिक आदि कर्मों का विधिपूर्वक परित्याग (संन्यास) भी उपरति है।

"निवर्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिः अथवा विहितानां कर्मणां विधिना परित्यागः ।" वेदान्तसार ४

**उपादान—**

उपादान कारण वह सामग्री है जिससे कार्य का निर्माण होता है। उदाहरणतः तन्तु पट का उपादान कारण है। वेदान्त में स्वोपाधिभूत अज्ञान की प्रधानता से ईश्वर ही उपादान कारण है।

"अज्ञानोपहितं चैतन्यं स्वोपाधिप्रधानतयोपादानं च भवति ।"



वेदान्तसार ११

"यथा सतः पुरुषात्केशलोमानि
तथाह्यक्षरात्सम्भवतीह विश्वम् ।"
मुण्डकोपनिषद्

उपासना—

चराचर जगत् को ब्रह्म का रूप जानकर उसमें आदरपूर्वक चिरकाल-पर्यन्त अपनी मनोवृत्ति को स्थिर करने के लिए किए जाने वाले कर्मों को उपासना कर्म कहते हैं।

"उपासनानि—सगुणब्रह्मविषयमानसव्यापाररूपाणि···" ।
वेदान्तसार ४

"उपासनं तु यथाशास्त्रसमर्थितं किञ्चिद् आलम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरितमिति ।"
छान्दोग्योपनिषद् भाष्य भूमिका

कषाय—

लय और विक्षेप का अभाव होने पर भी जब चित्तवृत्ति रागादि वास-नाओं के कारण जडभाव को प्राप्त हो जाती है और फलतः अखण्ड ब्रह्म का अवलम्बन नहीं कर सकती तो चित्तवृत्ति की उस अवस्था को निर्विकल्पक समाधि का 'कषाय' नामक विघ्न कहा गया है।

"लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखण्डवस्त्वनव लम्बनं कषायः ।" वेदान्तसार ३२

कारणशरीर—

ईश्वर का समष्टिभूत अज्ञान सब का कारण है, अतः इसे कारणशरीर कहते हैं।

"ईश्वरस्येयं समष्टिरखिलकारणत्वात् कारणशरीरम्······ ।"
वेदान्तसार ७

कुम्भक—

प्राणवायु को बाहर या भीतर ले जाने का प्रयत्न न करके वह जहाँ पर हो वहीं पर उसकी गति को स्तम्भित कर देना कुम्भक प्राणायाम है।

"न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम् ।"
"सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेतत् प्रवदन्ति तज्ज्ञाः ।"
भास्वती २।५०

"रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवल कुम्भकः" ।। वसिष्ठ संहिता

**चार्वाक—**

भारत में भौतिकवादियों को 'चार्वाक' कहा जाता है। ये लोग समस्त जगत् को पृथिवी आदि चार भूतों का परिणाम मानते हैं। चैतन्य आत्मा को इन भूतों से पृथक् नहीं मानते। आत्मा का अस्तित्व न मानने से परलोक, पुनर्जन्म श्राद्ध और कर्मफल में भी इनकी आस्था नहीं है। ये केवल प्रत्यक्ष को ही प्रमाण मानते हैं। इनका दर्शन है—

"यावज्जीवेत् सुखं जीवेत्, ऋणं कृत्वा घृतं पिवेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।।"

इन चार्वाकों में भी कई भेद हैं, जैसे—स्थूलदेहात्मवादी, इन्द्रियात्मवादी प्राणात्मवादी और मनआत्मवादी।

**जहदजहल्लक्षणा—**

वाच्यार्थ के एक अंश का परित्याग करके अवशिष्ट अंश का बोध कराने वाली वृत्ति 'जहदजहल्लक्षणा' कहलाती है। इस वृत्ति के द्वारा वाच्यार्थ के एक भाग का परित्याग कर दिया जाता है और एक भाग को ग्रहण कर लिया जाता है।

"तस्माद्यथा 'सोऽयं देवदत्त' इति वाक्यं तदर्थो वा तत्कालैतत्काल-विशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाविद्धतत्कालैतत्कालविशिष्टत्वांशं परित्यज्याविकलं देवदत्तांशमात्रं लक्षयति तथा 'तत्त्वमसी'ति..."

वेदान्तसार २७

"वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा ।"

विद्वन्मनोरञ्जनी

जहदजहल्लक्षणा को ही भागलक्षणा या भागत्यागलक्षणा भी कहते हैं।

"तत्त्वमस्यादिविषयेषु लक्षणा भागलक्षणा ।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ।।" पञ्चदशी ७।७४

**जहल्लक्षणा—**

वाच्यार्थ का पूर्णरूप से परित्याग करके वाच्यार्थ से सम्बद्ध किसी दूसरे अर्थ का बोध कराने वाली वृत्ति को जहल्लक्षणा कहते हैं।

"तत्र तु गंगाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वा-

द्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा न सङ्गच्छते।" वेदान्तसार २६

"वाच्यार्थम् अशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणा यथा गंगायां घोषः।" विद्वन्मनोरञ्जनी

**जीवन्मुक्त—**

स्वरूपभूत ब्रह्म के ज्ञान से ब्रह्मविषयक अज्ञान के नाश द्वारा ब्रह्म का साक्षात्कार हो जाने पर, जिसका अज्ञान एवं तत्कार्य तथा सञ्चित कर्म, संशय और विपर्यय (विपरीत ज्ञान) आदि नष्ट हो जाते हैं और फलतः जो सम्पूर्ण सांसारिक बन्धनों से मुक्त हो जाता है, ऐसा ब्रह्मनिष्ठ पुरुष जीवन्मुक्त कहलाता है—

"जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा, स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः।" वेदान्तसार ३४

**जीवन्मुक्ति—**

जब जीव को शरीर रहते हुए ही ब्रह्म तत्त्व का ज्ञान हो जाता है तो उस स्थिति को जीवन्मुक्ति की स्थिति कहते हैं। प्रारब्ध कर्मों का नाश न होने के कारण तत्त्वज्ञानी भी जीवन्मुक्तावस्था में शरीर धारण करता है।

"तर्हि तत्त्वसाक्षात्कारे जातेऽप्याप्रारब्धक्षयमविद्यालेशानुवृत्त्या जीवन्मुक्तिरस्तु।"
विवरणप्रमेयसंग्रह १।१

**तत्त्वमसि—**

अर्थात् 'तुम वही हो।' प्रकृत में 'तत्' पद परोक्षत्वादिविशिष्ट चैतन्य का वाचक है एवं 'त्वम्' पद अपरोक्षत्वादिविशिष्ट चैतन्य का बोधक है। सदानन्द ने सामानाधिकरण्य, विशेषणविशेष्यभाव तथा लक्ष्यलक्षणभाव नामक सम्बन्धों के आश्रयण से 'तत्त्वमसि' वाक्य को अखण्ड (निर्गुणब्रह्मरूप) अर्थ का बोधक सिद्ध किया है।

"इदं 'तत्त्वमसि' वाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति। सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यभावः प्रत्यगात्मपदार्थयोर्लक्षणभावश्चेति।

"...तथात्र 'तत्त्वमसि' इति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिश्चैतन्ये तात्पर्यसम्बन्धः।" वेदान्तसार, २३

तितिक्षा—

शीत-उष्ण, जय-पराजय, मान-अपमान आदि द्वन्द्वों को सहन करना तितिक्षा कहलाता है।

"तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता।" वेदान्तसार ४

तैजस्—

सूक्ष्मशरीर की व्यष्टि से उपहित चैतन्य को तेजोमय अन्तःकरण की उपाधि से विशिष्ट होने के कारण तैजस् कहते हैं।

"एतद्व्यष्टयुपहितं चैतन्यं तेजसो भवति तेजोमयान्तःकरणोपहितत्वात्।" वेदान्तसार १४

'प्रविविक्तभुक् तैजसः।'

'स्वप्नस्थानस्तैजस उकारः।' माण्डूक्योपनिषद् १।४

'ह्यन्तःप्रज्ञस्तु तैजसः'; 'तैजसः प्रविविक्तभुक्'। गौडपादकारिक १।१

'सूक्ष्मभुक् चतुरात्मा तैजसः।'

'स्वप्नस्थानश्चतुरात्मा तैजसः।' नृसिंहोत्तरतापनी १।१-२

दम—

श्रवण-मननादि से अतिरिक्त विषयों से चक्षु-श्रोत्र आदि बाह्येन्द्रियों का हटा लेना दम कहलाता है।

"दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम्॥" वेदान्तसार ४

धारणा—

अन्तःकरण को अद्वितीय वस्तु ब्रह्म में नियुक्त करना धारणा कहलाता है—

"अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा।" वेदान्तसार ३१

ध्यान—

अद्वितीय वस्तु ब्रह्म में रुक-रुक कर अन्तःकरण की वृत्तियों को प्रवाहित करना 'ध्यान' कहलाता है।

"तत्राद्वितीयवस्तुनि विच्छिद्य विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम्।" वेदान्तसार ३१

नित्य—

जिन कर्मों को करने से कोई विशेष पुण्य नहीं होता किन्तु न करने से पाप बढ़ जाता है, वे नित्य कर्म कहे जाते हैं। जैसे—सन्ध्यावन्दनादि।

"नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि।" वेदान्तसार ४

**निदिध्यासन—**

ब्रह्मभिन्न प्रतीत होने वाले विविध प्रकार के देहादि पदार्थों के प्रति ब्रह्म-भिन्नत्व भावना का त्यागकर, उन सम्पूर्ण पदार्थों को ब्रह्माभिन्न मानना निदिध्यासन है—

"विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यास-नम्।"

वेदान्तसार ३०

**निमित्त—**

निमित्त कारण वह कारण है, जिसकी प्रेरणा से कार्य की उत्पत्ति होती है। अर्थात् कार्य का प्रयोजन या साधन जिससे कार्य की उत्पत्ति होती है। वेदान्त में अपने चैतन्यांश की प्रधानता से ईश्वर जड़ जगत् का निमित्त कारण है।

"अज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तम्…।" वेदान्तसार ११

**नियम—**

शौच, सन्तोष, तपस्या, स्वाध्याय एवं ईश्वरप्रणिधान को नियम कहा गया है—

"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।" वेदान्तसार ३१

**निर्विकल्पक समाधि—**

जिस अवस्था में ज्ञाता, ज्ञान एवं ज्ञेय रूप भेदों के विलीन हो जाने पर अद्वितीय वस्तु ब्रह्म के आकार को धारण करने वाली चित्तवृत्ति का एकमात्र अद्वितीय वस्तु में आत्यन्तिक एकीभाव हो जाता है, उस अवस्था को निर्विकल्पक-समाधि कहते हैं। उस अवस्था में वस्तुतः अद्वितीय वस्तु के आकार की धारणा करने वाली चित्तवृत्ति का बोध न होकर, केवल अद्वितीय वस्तु का ही ज्ञान होता है, जिस प्रकार जल में घुलने के पश्चात् जल का आकार धारण करने वाले लवण का भान न होकर जलमात्र का ही भान होता है—

"निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकार-कारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम्। तदा तु जलाकारकारित-लवणानवभासेनाद्वितीयवस्तुमात्रमवभासते।" वेदान्तसार ३०

**नैमित्तिक—**

किसी निमित्त को उपलब्ध कर अवश्यकर्तव्यता होने के कारण श्रुति

द्वारा अभिहित किए गए कर्म नैमित्तिक कर्म कहलाते हैं।

"नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि।"

वेदान्तसार ४

"निमित्तमात्रमासाद्यावश्यकर्तव्यत्वमा विहितानि नैमित्तिकानि।"

विद्वन्मनोरञ्जनी

पञ्चीकरण—

सृष्टिविकासार्थं पञ्च भूतों का परस्पर सम्मिश्रण ही पञ्चीकरण है। इस प्रक्रियानुसार पाँचों भूतों के प्रत्येक के दो बराबर भाग करके उन-उन भूतों के आधे-आधे भागों में अन्य-अन्य भूतों के आठवें अंश को मिला देने से पञ्चीकृत महाभूत बनते हैं।

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते॥" पञ्चदशी १।२७

तथा वेदान्तसार १५

परमकैवल्य—

एकमात्र अद्वितीय ब्रह्म का ही त्रिकालाबाधित अस्तित्व होने के कारण तथा नानात्व के अविद्या निर्मित होने के कारण ब्रह्म ही परम कैवल्य कहा जाता है।

पूरक—

प्राणवायु को भीतर खींचकर (जितनी देर सुखपूर्वक रोक सके) भीतर ही रोके रहना पूरक प्राणायाम है।

"बाह्यस्थितं घ्राणपुटेन वायुमाकृष्य तेनैव शनैः समन्तात्।
नाडीश्च सर्वाः परिपूरयेद्यः स पूरको नाम महानिरोधः॥"

भास्वती २।५०

प्रत्याहार—

इन्द्रियों को अपने-अपने विषयों से हटा लेना 'प्रत्याहार' कहलाता है—

"इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः।" वेदान्तसार ३१

प्राणायाम—

रेचक (नासिका द्वारा वायु का त्याग), पूरक (नासिका द्वारा वायु का भीतर खींचना) एवं कुम्भकरूप (भीतर खींची गई वायु को भीतर अवरुद्ध किए रहना) लक्षणों वाले प्राण वायु निग्रह के उपाय प्राणायाम कहलाते हैं।

"रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः।"

वेदान्तसार ३१

**प्रायश्चित्त—**

शास्त्रों में विहित कर्म को न करने से तथा शास्त्रों द्वारा निषिद्ध कर्मों को करने से जो पाप उत्पन्न होता है, उसके निवारणार्थ जो कर्म किए जाते हैं उन्हें प्रायश्चित्त कर्म कहते हैं।

"प्रायश्चित्तानि—पापक्षयसाधनानि चान्द्रायणादीनि।" वेदान्तसार ४

"विहितान्तःकरणप्रतिषिद्धसेवारूपनिमित्तविशेषानुबन्धीनि प्रायश्चित्तानि।" विद्वन्मनोरञ्जनी

**फल—**

प्रतिपाद्य आत्मज्ञान अथवा उनके अनुष्ठान का उस विषय में श्रूयमाण प्रयोजन ही फल है।

"...फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र श्रूयमाणं प्रयोजनम्।" वेदान्तसार ३०

**फलव्याप्ति—**

अन्तःकरण के विषयाकार में परिणत हो जाने पर उससे अवच्छिन्न या उसमें प्रतिबिम्बित चैतन्य (चिदाभास) के द्वारा उस विषय का एक ही कारण फलव्याप्ति है।

"बाह्येन्द्रियसन्निकृष्टार्थाकारबाह्यधीपरिणामावच्छिन्नचिदंशकृतप्राकट्याश्रयत्वं फलव्याप्यत्वम्।" विद्वन्मनोरञ्जनी

**बुद्धि—**

निश्चय करने वाली अन्तःकरण की वृत्ति को बुद्धि कहते हैं।

"बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः...।" वेदान्तसार १३

"बुद्धिं तु सारथिं विद्धि।" कठोपनिषद् ३।३

"बुद्धिर्धृतिः स्मृतिः प्रज्ञानम्।" मैत्रायणी उपनिषद् ६।३१

**ब्रह्मचर्य—**

पुरुष या नारी का अपनी उपस्थेन्द्रिय को नियन्त्रण में रखना ब्रह्मचर्य है।

"ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम्।" विद्वन्मनोरञ्जनी

"ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः।"

व्यासभाष्य २।३०

**ब्रह्मनिष्ठ—**

एकमात्र ब्रह्म में निष्ठा (आस्था) रखने वाले पुरुष को ब्रह्मनिष्ठ कहा गया है। सदानन्द ने वेदान्तसार में ब्रह्मनिष्ठ को ही 'जीवन्मुक्त' संज्ञा दी है।

**मनन—**

श्रुत अद्वितीय ब्रह्म का वेदान्त के अनुरूप तर्कों द्वारा निरन्तर चिन्तन करना 'मनन' कहलाता है—

"मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम्।"
वेदान्तसार ३०

**मनस्—**

आन्तरिक भावनाओं की करणभूत इन्द्रिय अन्तःकरण में जब "मैं चिद्रूप हूँ, मैं देह हूँ"—इस प्रकार की संकल्पयुक्त अथवा "मैं पढ़ूँ या न पढ़ूँ"—इस प्रकार की विकल्पात्मक वृत्ति उत्पन्न होती है तो उसे मन कहते हैं—

"मनो नाम संकल्पविकल्पात्मिकाऽन्तःकरणवृत्तिः।" वेदान्तसार १३

"एतस्य प्राणस्य ब्रह्मणो मनो दूतम्।" कौषीतकी उपनिषद् २।१

**मनोमयकोश—**

ज्ञानेन्द्रियों से युक्त मन को मनोमयकोश कहते हैं।

"मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति।" वेदान्तसार १३

"मनोमयः प्राणशरीरः।" छान्दोग्योपनिषद्, ३।१४।२

"सात्त्विकैर्धीन्द्रियैः साकं विमर्शात्मा मनोमयः।"
पञ्चदशी १।३५

**महाप्रपञ्च—**

स्थूल, सूक्ष्म और कारण प्रपञ्चों का समुदाय महाप्रपञ्च कहलाता है।

'एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान् प्रपञ्चो भवति।" वेदान्तसार १८

**महावाक्य—**

महान् अखण्ड ब्रह्मतत्त्व के प्रतिपादक वाक्यों को वेदान्त में महावाक्य की संज्ञा दी गई है। विना महावाक्य के अद्वैत ब्रह्म को जानना असम्भव ही है। इसीलिए संक्षेपशारीरिककार सर्वज्ञात्ममुनि ने कहा है—

"विनाग्रमहावाक्यमतो न कश्चित् पुमांसमद्वैतमवैति जन्तुः।
संक्षेप शारीरिक ३।३०२

तत्त्वमसि आदि महावाक्यों की संख्या १२ मानी गई है। (देखिए विवेक—तत्त्वमसि निरूपण)

**माया—**

ईश्वर की शक्ति का नाम माया है। माया सत् तथा असत् से विलक्षण होने के कारण अनिर्वचनीय है। माया का एक रूप विषयात्मक भी है। जिसके अनुरूप जगत् माया मात्र है—

"ईश्वरस्य मायाशक्तिः प्रकृतिः।" शा० भा० श्वे० उ० १।४।३१

"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।" गौडपादकारिका

**यम—**

यह निर्विकल्पक समाधि के आठ अङ्गों में से एक है। अहिंसा, सत्य, अस्तेय (चोरी न करना), ब्रह्मचर्य और अपरिग्रह को 'यम' कहा गया है।

तत्र "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।" वेदान्तसार ३१

**रसास्वाद—**

अखण्डवस्तु (ब्रह्म) का अवलम्बन न करने पर भी चित्तवृत्ति का सविकल्पक समाधि के आनन्द का आस्वादन करना 'रसास्वाद' कहलाता है अथवा निर्विकल्पकसमाधि के प्रारम्भिक काल में सविकल्पक समाधि के आनन्द का आस्वादन 'रसास्वाद' कहलाता है—

"अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा।" वेदान्तसार ३२

**लय—**

'लय' निर्विकल्पकसमाधिकाल में होने वाले विक्षेप कषाय आदि चार प्रकार के विघ्नों में से एक है।

आलस्यवश अखण्ड वस्तु (ब्रह्म) का अवलम्बन न करने के कारण चित्तवृत्ति का सो जाना 'लय' कहलाता है।

"लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा।"

वेदान्तसार ३२

**लिङ्ग—**

जीव तथा ब्रह्म के ऐक्य-रूप अर्थ का बोध कराने के कारण उपक्रम, उपसंहार, अभ्यास, अपूर्वता, फल, अर्थवाद एवं उपपत्ति—ये छः लिङ्ग कहलाते हैं—

'लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि।"

वेदान्तसार

"उपक्रमोपसंहाराभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥" सर्वदर्शनसंग्रह

**विकार—**

जब कोई वस्तु अपने स्वरूप को छोड़कर किसी दूसरे रूप को ग्रहण कर लेती है, तो उसे विकारभाव कहते हैं। विकार को ही परिणाम भी कहते हैं

'सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः ।" वेदान्तसार २१

"तत्त्वतोऽन्यथाभावः परिणामः ।"

ब्रह्मसूत्र १।२।२ पर वेदान्तकल्पतरुपरिमल

"अवस्थान्तरतापत्तिरेकस्य परिणामिता ।
स्यात् क्षीरंदधि मृत्कुम्भः सुवर्णं कुण्डलं यथा ॥" पञ्चदशी १३।८

'वाचारम्भणं विकारो नामधेयम् ।" छान्दोग्योपनिषद् ६।१।४

**विक्षेप—**

अखण्ड वस्तु (ब्रह्म) का अवलम्बन न करने के कारण, चित्तवृत्ति का अन्य वस्तुओं में 'अवलम्बन' 'विक्षेप' कहा गया है—

"अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः ।"

वेदान्तसार ३२

**विज्ञानमयकोश—**

पांच ज्ञानेन्द्रियों (श्रोत्र, त्वक्, चक्षु, रसना, तथा घ्राण) सहित बुद्धि को विज्ञानमय कोश कहते हैं।

"इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशो भवति ।" वेदान्तसार १३

"अन्योऽन्यतर आत्मा विज्ञानमयः ।" तैत्तिरीयोपनिषद् २।४।१

"तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका ।"

पञ्चदशी १।३५

**विश्व—**

स्थूलशरीरों की व्यष्टि से उपहित चैतन्य को, सूक्ष्म शरीर के अभिमान का परित्याग किए बिना स्थूल शरीर आदि में प्रविष्ट होने के कारण, 'विश्व' कहते हैं।

"एतद्व्यष्टयुपहितं चैतन्यं विश्व इत्युच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात् ।" वेदान्तसार १७

"सर्वथा विश्वशरीरवर्तित्वाद्विश्व इत्युक्तं भवति ।" विद्वन्मनोरञ्जनी

**वृत्ति—**

अन्तःकरण के चक्षु आदि द्वारा घटादि विषय देश में जाकर तत्तदाकार में परिवर्तित होने को वृत्ति कहते हैं।

"यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादि द्वारा घटादि विषयदेशं गत्वा घटादिविषयाकारेण परिणमते स एव परिणामो वृत्तिरित्युच्यते।" वेदान्तपरिभाषा, परिच्छेद १

**वेदान्त—**

जो दर्शन उपनिषदों पर आधारित है उसे वेदान्त कहते हैं। ब्रह्मसूत्र, गीता एवं प्रस्थानत्रयी का शाङ्करभाष्य वेदान्त का उपकारक साहित्य है। यद्यपि रामानुज, निम्बार्क एवं वल्लभ का दर्शन भी वेदान्त है, किन्तु आज प्रायः वेदान्त शब्द से शङ्कराचार्य के अद्वैत वेदान्त का ही आशय ग्रहण किया जाता है।

"वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरिकसूत्रादीनि च।"

वेदान्तसार ३

**व्यष्टि—**

व्यष्टि शब्द का तात्पर्य है सीमित को व्याप्त करने वाली। वेदान्त में अज्ञान की व्यष्टि के लिए अविद्या शब्द आया है।

"यथा वनस्य व्यष्टयभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्टयभिप्रायेण जलानीति तथा अज्ञानस्य व्यष्टयभिप्रायेण तदनेकत्वव्यपदेशः 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादि श्रुतेः।" वेदान्तसार ७

"सत्त्वशुद्धयविशुद्धिभ्यां मायाविद्ये च ते मते। पञ्चदशी १।१६

**शम—**

श्रवण, मनन तथा निदिध्यासन से अतिरिक्त विषयों से मन को हटाना शम कहलाता है।

"शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः।"

वेदान्तसार ४

**श्रद्धा—**

गुरु के द्वारा कहे गए वेदान्त-वाक्यों में विश्वास रखना श्रद्धा है।

"गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा।" वेदान्तसार ४

**श्रवण—**

छः प्रकार के लिङ्गों (उपक्रम और उपसंहार, अभ्यास, अपूर्वता, फल, अर्थवाद एवं उपपत्ति) द्वारा सम्पूर्ण वेदान्तवाक्यों का तात्पर्य एकमात्र अद्वितीय ब्रह्म में मानना श्रवण कहलाता है—

"श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणम् । लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि ।"

वेदान्तसार ३०

**श्रोत्रिय—**

वेद एवं वेदाङ्गों के विद्वान् को श्रोत्रिय कहते हैं। श्रोत्रियश्छन्दोऽधीते। वृहदारण्यक उपनिषद् के अनुसार श्रोत्रिय को पाप एवं कामना से रहित होना चाहिए। 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः।' (वृ० उ० ४।३।३३)

इस सम्बन्ध में एक अन्य श्लोक भी मिलता है—

जन्मना जायते शूद्रः संस्कारैर् द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्चयते ॥

**संसर्ग—**

किसी वाक्य में आए हुए पदों से निर्दिष्ट पदार्थों के पारस्परिक सम्बन्ध को संसर्ग कहते हैं। यह संसर्ग दो प्रकार का होता है—भेदरूपसंसर्ग और अभेदरूपसंसर्ग । जहां पर वाक्यगत पदों में भिन्न-भिन्न विभक्तियों का प्रयोग होने से सामानाधिकरण्य का अभाव होता है, वहाँ पर वाक्यार्थ अभेदरूपसंसर्ग माना जाता है।

**सत्य —**

वस्तुस्थिति का बिना अतिक्रमण किए हुए बोलना सत्य है।

"सत्यं यथार्थभाषणम् ।" विद्वन्मनोरञ्जनी

"सत्यं यथार्थे वाङ्मनसे यथा दृष्टं यथानुमितं यथा श्रुतं तथा वाङ्मनश्चेति ।" व्यासभाष्य, २।३०

**समाधान—**

वश में किए गए मन का श्रवणादि के अनुकूल विषयों (यथा गुरुसेवा, गुरुवचनों में श्रद्धा आदि) में स्थिरता को समाधान कहते हैं।

"निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम् ॥"

वेदान्तसार ४

समाधि—

चित्त को समाहित करने का नाम समाधि है। इस स्थिति में ध्यान एवं ध्येय में अभेद होता है। तथा ध्येय ध्यान के आधार—चित्त पर प्रतिष्ठित होता है। इस अवस्था में ध्यान की स्वरूपशून्यता रहती है।

"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।" योगसूत्र ३।३

सर्वज्ञ—

सर्वज्ञ का अर्थ है सब कुछ जानने वाला। वेदान्त में समष्टि उपाधि से युक्त चैतन्य को सर्वज्ञ कहा जाता है।

"इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादि गुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते सन्ततज्ञानावभासकत्वम्।" वेदान्तसार ७

"सः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते॥" मुण्डकोपनिषद् १।१।९

सविकल्पकसमाधि—

जिस समाधि-अवस्था में ज्ञाता, ज्ञेय एवं ज्ञान आदि भेदों के बने रहने पर भी अद्वितीय वस्तु (ब्रह्म) के आकार वाली चित्तवृत्ति का एकमात्र अद्वितीय (ब्रह्म) में ही अवस्थान रहता है, उस अवस्था को सविकल्पक-समाधि कहते हैं। जिस प्रकार मृत्तिका से बने हुए गज, मृग आदि भेदों के बने रहने पर भी एकमात्र मृत्तिका का भान होता है उसी प्रकार सविकल्पक समाधि में ज्ञानादि भेदों का भान होने पर भी एकमात्र अद्वैत वस्तु ही भासित होती है—

"तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् तदा मृन्मयगजादिभानेऽपि मृद्भानवद् द्वैतभानेऽप्यद्वैतं भासते। वेदान्तसार ३०

सुषुप्ति—

आत्मा की मायोपहित प्राथमिक अवस्था को सुषुप्ति कहते हैं। सुषुप्ति अवस्था में कारण शरीर उपाधि बनता है, जिसे आनन्दमयकोश भी कहा जाता है। सुषुप्ति में जागरण और स्वप्न का संसार अज्ञान के साथ एकीभूत हो जाता है।

"...सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति चोच्यते।" वेदान्तसार ७

**सूक्ष्मशरीर—**

मृत्यु के बाद तथा जन्म से पूर्व जीव के कर्म-संस्कार जिस शरीर में रहते हैं, उसे सूक्ष्मशरीर कहते हैं। सूक्ष्मशरीर को लिङ्गशरीर भी कहा जाता है क्योंकि इसके द्वारा प्रत्यगात्मा के अस्तित्व का ज्ञापन होता है। पांच ज्ञानेन्द्रियां—बुद्धि और मन, पांच कर्मेन्द्रियां, तथा पांच प्राण इन सत्रह अवयवों से मिलकर सूक्ष्मशरीर बनता है।

"सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि।" वेदान्तसार १३

**सूत्रात्मा—**

सूक्ष्म शरीरों की समष्टि से उपहित चैतन्य को समस्त प्राणियों के लिङ्ग-शरीरों में सूत्र के समान अनुस्यूत होने के कारण सूत्रात्मा कहते हैं।

"एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा…।" वेदान्तसार १४

**हिरण्यगर्भ—**

'हिरण्यस्य गर्भः' वृत्ति के अनुसार ज्ञानशक्तिमान विज्ञानमयकोश ही हिरण्यमय अण्डा है। उससे आच्छादित होने के कारण उसके अभिमानी चैतन्य को हिरण्यगर्भ कहते हैं।

"हिरण्य गर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च।" वेदान्तसार १४

"एष हि खल्वात्मा……हिरण्यगर्भः। मैत्रायणी उपनिषद् ६।८

# वेदान्तसारान्तर्गत उद्धरणों की अनुक्रमणिका

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वज्ञ प्रभवाप्ययौ हि भूतानाम् ॥
माण्डूक्योपनिषद् ६, पृ० २६

ऐतदात्म्यमिदं सर्वम् । छान्दोग्योपनिषद् ६।८।७, पृ० १०८

कर्मणा पितृलोको विद्यया देवलोकः । बृहदारण्यकोपनिषद् १।५।१६, पृ० ६

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा मन्यते निष्प्रभं चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ हस्तामलक १०, पृ० ३६

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः ॥
माण्डूक्योपनिषद् ३, पृ० ६४

तत्त्वमसि । छान्दोग्योपनिषद् ६।८।७। पृ ८६

तपसा कल्मषं हन्ति । मनुस्मृति १२।१०४, पृ० ६

तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन ।
बृहदारण्यकोपनिषद् ४।४।२२, पृ० ६

तरति शोकमात्मवित् । छान्दोग्योपनिषद् ७।१।३, पृ० ७

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । तैत्तिरीयोपनिषद् २।१।१, पृ० ४२

तस्मै स विद्वानुपसन्नाय प्राह । मुण्डकोपनिषद् १।२।१३, पृ० १६

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिस्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥
श्वेताश्वतरोपनिषद् १।३, पृ० १८

ते ह प्राणाः प्रजापतिं पितरमेत्योचुः । छान्दोग्योपनिषद् ५।१।७, पृ० ६९

दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्त ओम् ॥ उपदेशसाहस्री १०।१
पृ० १०८

देवात्मशक्ति स्वगुणैर्निगूढाम् । श्वे० उ० १।३, पृ० १८

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥ पञ्चदशी १।२७, पृ० ५८

न तस्य प्राणा उत्क्रामन्ति । बृहदारण्यकोपनिषद् ४।४।६, पृ १३०

प्रज्ञानघन एवानन्दमयः । माण्डूक्योपनिषद् ५, पृ० ७०

प्रविविक्तभुक्तैजसः । माण्डूक्योपनिषद् ४, पृ० ५४

प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत् सकलं मुमुक्षवे ।। उपदेशसाहस्री १६।७२,
पृ० ६

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।। पञ्चदशी ७।९०, पृ० १०४

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ।। नैष्कर्म्यसिद्धि ४।६२, पृ० १२७

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ।। पञ्चदशी ७।९१, पृ० १०४

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यते ।। पञ्चदशी ७।९२, पृ० १०४

ब्रह्मवित्त्वं तथा मुक्त्वा सा आत्मज्ञो न चेतर. । उपदेशसाहस्री १२।१३ पृ० १२७

ब्रह्म वेद ब्रह्मैव भवति । मुण्डकोपनिषद् ३।२।९, पृ० ७

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।। मुण्डकोपनिषद् २।२।८, पृ० १२३

मनसैवानुद्रष्टव्यम् । बृहदारण्यकोपनिषद् ४।४।१९, पृ० १०५

यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ।। मुण्डकोपनिषद् १।१।९, पृ० २२

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तीयः पादः । माण्डूक्योपनिषद् ५, पृ० २९

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता । श्रीमद्भगवद्गीता ६।१९, पृ० १२१

यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । छान्दोग्योपनिषद् ६।१।४, पृ० १०८

यन्मनसा न मनुते । केनोपनिषद् १।५, पृ० १०५

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ।।
नास्वादयेद् रसं तत्र निःसङ्गः प्रज्ञया भवेत् । माण्डूक्यकारिका ३।४४,४५
पृ० १२१

विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेत् । वाक्यसुधा १३, पृ० ३६

विमुक्तश्च विमुच्यते । कठोपनिषद् २।२।१, पृ० १३०

वैशेष्यात्तु तद्वादस्तद्वादः । ब्रह्मसूत्र २।४।२२, पृ० ५८

शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति । बृहदारण्यकोपनिषद् ४।४।२२, पृ० ६

शिवमद्वैतं चतुर्थं मन्यन्ते । माण्डूक्योपनिषद् ७, पृ० ३२

शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । योगसूत्र २।३२, पृ० ११६

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ पञ्चदशी ७।७५, पृ० ९१

सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव । पृ० १२५

सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः ।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः ॥ पृ० ७९

समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । मुण्डकोपनिषद् १।२।१२, पृ० १६

सर्वं खल्विदं ब्रह्म । छान्दोग्योपनिषद् ३।१४।१, पृ० ६७

स वा एष पुरुषोऽन्नरसमयः । तैत्तिरीयोपनिषद् २।१।१, पृ० ६९

सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम् ॥ नैष्कर्म्यसिद्धि ३।३, पृ० ८६

सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं च पश्यन्नपि चाद्वयत्वतः ।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः ॥ उपदेशसाहस्री १०।१३, पृ० १२५

सेयं दैवतैक्षत हन्ताहमिमास्तिस्रो
देवता अनेन
जीवेनात्मनानुप्रविश्य
नामरूपे व्याकरवाणीति तासां
त्रिवृतं त्रिवृतमेकैकां
करवाणीति । छान्दोग्योपनिषद् ६।३।२३, पृ० ६०-६१

सौम्यैकेन मृत्पिण्डेनसर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयम् मृत्तिकेत्यैव सत्यम्। छा० उ० १।१।४, पृ० १०८

# शब्दानुक्रमणिका

## विशिष्टसहायकग्रन्थ


| | | |
|---|---|---|
| अद्वैतसिद्धि | मधुसूदन सरस्वती | बम्बई १९१७ |
| अपरोक्षानुभूति | शङ्कराचार्य | श्रीरंगम् १९७२ |
| आत्मबोध | शङ्कराचार्य | श्रीरंगम् १९७२ |
| उपदेशसाहस्री | शङ्कराचार्य | निर्णयसागर १९१४ |
| गौडपादकारिका (शाङ्करभाष्य तथा आनन्दगिरि की टीकासहित) | गौडपादाचार्य | बनारस १९४२ |
| नैष्कर्म्यसिद्धि | सुरेश्वराचार्य | पूना १९२५ |
| पञ्चदशी | विद्यारण्य | काशी १९४२ |
| ब्रह्मसिद्धि | मण्डनमिश्र | मद्रास १९३७ |
| ब्रह्मसूत्रशाङ्करभाष्य | शङ्कराचार्य | निर्णयसागर १९१७ |
| भामती | वाचस्पतिमिश्र | निर्णयसागर १९१७ |
| मानसोल्लास | सुरेश्वराचार्य | मद्रास, प्रथम संस्करण |
| रत्नप्रभा | गोविन्दानन्द | काशी सं० १९९२ |
| लङ्कावतारसूत्र | | लन्दन १९२३ |
| वाक्यसुधा | शङ्कराचार्य | बनारस १९०१ |
| विवरणप्रमेयसंग्रह | विद्यारण्य | काशी सं० १९९६ |
| विवेकचूडामणि | शङ्कराचार्य | अल्मोड़ा सं० १९५२ |
| वेदान्तपरिभाषा | धर्मराजाध्वरीन्द्र | बनारस १९३७ |
| वेदान्तसार (विद्वन्मनोरञ्जनी तथा सुबोधिनी सहित) | सदानन्द | बम्बई १८९३ |
| वेदान्तसार (जैकब द्वारा सम्पादित) | सदानन्द | पूना १९२९ |
| (हिरियन्ना द्वारा सम्पादित) | | |

| | | |
|---|---|---|
| वेदान्तसार | सदानन्द (निखिलानन्द द्वारा सम्पादित) | अल्मोड़ा १९४९ |
| वेदान्तसार | सदानन्द (रामशरण शास्त्री द्वारा सम्पादित) | बनारस १९५४ |
| संक्षेपशारीरक | सर्वज्ञात्ममुनि | बनारस १९२४ |
| सिद्धान्तलेशसंग्रह | अप्पयदीक्षित | काशी सं० २००१ |
| A Study of Śaṅkara | *Nalini Mohan Shastri* | Calcutta 1942 |
| Hinduism and Buddhism | *Illiot* | London, IInd Edition |
| History of Indian Philosophy Vol. II | *S. Radhakrishnan* | London 1930 |
| History of Indian Philosophy Vol. I | *S. N. DasGupta* | London 1951 |
| Brahmasūtra, Introduction | *Thibaut* | London 1896 |


—:o:—

